# पुष्कराष्टकम्

श्रीगणेशाय नमः ॥
श्रियायुतं त्रिदेहतापपापराशिनाशकं
मुनीन्द्रसिद्धसाध्यदेवदानवैरभिष्टुतम् ।
तटेस्ति यज्ञपर्वतस्य मुक्तिदं सुखाकरं
नमामि ब्रह्मपुष्करं सवैष्णवं सशङ्करम् ॥ १॥

सदार्यमासशुष्कपञ्चवासरे वरागतं
तदन्यथान्तरिक्षगं सुतन्त्रभावनानुगम् ।
तदम्बुपानमज्जनं दृशां सदामृताकरं
नमामि ब्रह्मपुष्करं सवैष्णवं सशङ्करम् ॥ २॥

त्रिपुष्कर त्रिपुष्कर त्रिपुष्करेति संस्मरेत्-
स दूरदेशगोऽपि यस्तदङ्गपापनाशनम् ।
प्रपन्नदुःखभञ्जनं सुरञ्जनं सुधाकरं
नमामि ब्रह्मपुष्करं सवैष्णवं सशङ्करम् ॥ ३॥

मृकण्डुमङ्कणौ पुलस्त्यकण्वपर्वतासिता
अगस्त्यभार्गवौ दधीचिनारदौ शुकादयः।
सपद्मतीर्थपावनैकद्दष्ट्यो दयाकरं
नमामि ब्रह्मपुष्करं सवैष्णवं सशङ्करम् ॥ ४॥

सदा पितामहेक्षितं वराहविष्णुनेक्षितं
तथाऽमरेश्वरेक्षितं सुरासुरैः समीक्षितम् ।
इहैव भुक्तिमुक्तिदं प्रजाकरं घनाकरं
नमामि ब्रह्मपुष्करं सवैष्णवं सशङ्करम् ॥ ५॥

त्रिदण्डिदण्डिब्रह्मचारितापसैः सुसेवितं
पुरार्धचन्द्रप्राप्तदेवनन्दिकेश्वराभिधैः ।
सवैद्यनाथनीलकण्ठसेवितं सुधाकरं
नमामि ब्रह्मपुष्करं सवैष्णवं सशङ्करम् ॥ ६॥

सुपञ्चधा सरस्वती विराजते यदन्तरे
तथैकयोजनायतं विभाति तीर्थनायकम् ।
अनेकदैवपैत्रतीर्थसागरं रसाकरं
नमामि ब्रह्मपुष्करं सवैष्णवं सशङ्करम् ॥ ७॥

यमादिसंयुतो नरस्त्रिपुष्करं निमज्जति
    पितामहश्च माधवोप्युमाधवः प्रसन्नताम् ।
प्रयाति तत्पदं ददात्ययत्नतो गुणाकरं
    नमामि ब्रह्मपुष्करं सवैष्णवं सशङ्करम् ॥ ८॥

इदं हि पुष्कराष्टकं सुनीतिनीरजाश्रितं
    स्थितं मदीयमानसे कदापि माऽपगच्छतु ।
त्रिसन्ध्यमापठन्ति ये त्रिपुष्कराष्टकं नराः
    प्रदीप्तदेहभूषणा भवन्ति मेशकिङ्कराः ॥ ९॥

इति शञ्कराचार्यविरचितं श्रीपुष्कराष्टकं समाप्तम् ॥